# ALANKARA KAUMUDI

( A Text-book on Sanskrit Alankaras )



*BY*

S N SHASTRI M A D PHIL LL B
H V KOCHER, M A VEDALANKARA

INDIAN UNIVERSITY PUBLISHERS
**Kashmere Gate, Delhi.**

First Impression 1950

Printed by University Press, University Buildings, Delhi 8

॥ श्रीः ॥

पुराणमित्येव न साधु सर्व्वं,

न चापि काव्यं नवमित्यवद्यम् ।

सन्तः परीक्ष्यान्यतरद् भजन्ते,

मूढः परप्रत्ययनेयबुद्धिः ॥

( कालिदासः.

# PREFACE

*ALANKARA* is a complicated avenue in the course of Sanskrit Poetics and teaching experience has shown that the older Text books on the subject are at places too difficult to be followed by a beginner whose study of the Sanskrit language is quite meagre, for instance, Dandin gives much too antiquated definitions and makes an out-of-date classification, while Vishvanatha enters into too many divisions and sub-divisions and puts the subject rather intricately by indulging into controversies For the degree students *Kavya-Prakasha* is out of question For, a beginner, in fact, needs a bare outline of the popular *alankaras* which he comes across in his short studies upto the degree classes The primary knowledge of the subject if made easily available to the students will serve them as a gateway to enter into the aisles of higher studies in the post-graduate standard

In fact, absence of any such elementary book, the students feel a handicap, and so keeping in view their needs and their present standard, this small work attempts to facilitate the study of the subject by placing it before the young alumni in an accessible manner. The subject is carefully analysed and *alankaras* are systematically grouped The definitions and suitable examples are chosen from standard works ranging from the *Agni Purana* to *Alankara Kaustubha* and every attempt is made to place the standard and authoritative opinion on the subject shorn of its prickly briers Examples are copiously given in order to bring out the subtle difference among analogous figures, and it is confidently hoped that the "*Alankara-kaumudi*" will serve as the moon-light to guide the new-comers through the thick of rhetorical studies if it could be placed in the course of those who have to travel by it

Sanskrit Department,
University of Delhi
*Akshaya-Tritiya*,
1950

S N Shastri
Kocher

॥श्री॥

# अलङ्कार-कौमुदी।

## ॥ अनुक्रमणी ॥

विषया -   पृष्ठे

विषया: — पृष्ठे





॥ श्री ॥

# अलङ्कार-कौमुदी ।

अलङ्कारलक्षणम्—

"काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।" (का द)

अलङ्कारस्य केवल शोभाधायकत्व हारादिवत्, न तु स्वरूपघटकत्वम् । अलङ्कारश्च रसादीनामुपकारक ।

तद्भेदा —

अलङ्कारश्च त्रिविध —शब्दालङ्कार, अर्थालङ्कार, उभयालङ्कारश्च । शब्दविशेषमवलब्य वर्तमानस्तत्परिवृत्तिमसहमानो वा शब्दालङ्कार । शब्दस्य परिवृत्ति सहमान अर्थविशेषमनुसन्धाय वर्तमानोऽलङ्कारोऽर्थालङ्कार । शब्दार्थयोरुभयो परिवृत्तिमसहमानोऽलङ्कार उभयालङ्कार ।

---

## अथ शब्दालङ्कारा ।

१. अनुप्रासालङ्कार ।

अनुप्रास शब्दसाम्य वैषम्येऽपि स्वरस्य यत् । (सा. द)

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्व वर्णसाम्यमनुप्रास । रसाद्यनुगुण प्रकृष्टो न्यास अनुप्रास । स च पञ्चधा ।

तत्राद्य छेकानुप्रास —

छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा । (सा द.)

अनेकधा स्वरूपत क्रमतश्च व्यञ्जनानामेकवारमात्र साम्य छेकानुप्रास । छेकैर्विदग्धै प्रयोज्यत्वादय छेकानुप्रास इत्यभिधीयते ।

यथा—

आदाय बकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान् ।<br>
अयमेति मन्दमन्द कावेरीवारिपावन पवन ॥ (सा द)

द्वितीयो वृत्यनुप्रासः ।

अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा ।
एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥ (सा. द.)

एकधा केवलं स्वरूपतः ।

रसविषयव्यापारवती वर्णरचना वृत्तिः, तदनुगतत्वेन व्यञ्जनाना प्रकर्षेण न्यासात् वृत्यनुप्रासः ।

यथा—

लताकुञ्जं गुञ्जन्मदवलिपुञ्जञ्चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
मरुन्मन्द मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि ॥

अथ वा—

भूमण्डले लसति भारतदेशभूमिर्या विद्यते सकलसौख्यविधानसूतिः ।
सर्वोपभोगमुपभुज्य नयन्ति यत्र सर्वे जना निजजनि कृतकृत्यकोटिम् ॥
(सरेन्द्रनाथस्य)

यथा वा नटराजस्य ताण्डववर्णने—

प्रमोदभरतुन्दिलप्रमथदत्ततालावली-
विनोदिनि विनायके डमरुडिण्डिमध्वानिनि ।
ललाटतटविस्फुटन्नवकपोटयोनिच्छटो
हठोद्धतजटोद्भटो गतपटो नटो नृत्यति ॥ (जगन्नाथस्य)

तृतीयः श्रुत्यनुप्रासः ।

उच्चार्यत्वाद् यदेकत्र स्थाने तालुरदादिके ।
सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥ (सा. द )

व्यञ्जनवर्णानामेकस्मात् स्थानादुच्चार्यमाणत्वेन यत् सादृश्य तत् श्रुत्यनुप्रास उच्यते । यथा—

तदहं विदधे तथा तथा दमयन्त्याः सविधे तव स्तवम् ।
हृदये निहितस्तया भवानपि नेन्द्रेण यथापनीयते ॥ (श्रीहर्षस्य)

अत्र त-थ-द-ध-न-सकाराणां दन्तस्थानोच्चार्यतया साम्यात् श्रुत्यनुप्रासः । अथवा—

पार्वतीफणिबालेन्दुभस्ममन्दाकिनीयुता ।
पवर्गमण्डितामूर्तिरपवर्गफलप्रदा ॥ (उ. सा)

अन्त्यौष्ठस्थानोच्चार्यमाणानां वर्णानां साम्यात् श्रुत्यनुप्रास. ।

तुरीयोऽन्त्यानुप्रासः ।

व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण यत् ।
आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत् ॥ (सा द)

यथावस्थं यथासम्भवमनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टस्यैव व्यञ्जनस्य प्रायेण पादस्य पदस्य चान्ते प्रयोज्यत्वादयमन्त्यानुप्रास उच्यते ।

यथा पादान्ते—

तत स मध्यङ्गतमंशुमन्त ज्योत्स्नावितान मुहुरुद्वमन्तम् ।
ददर्श धीमान्दिवि भानुमन्त गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥
गृहाणि नानावसुराजितानि, देवासुरैश्चापि सुपूजितानि ।
सर्वैश्च दोषैः परिवर्जितानि, कपिर्ददर्श स्वबलाजितानि ॥ (वाल्मीके)

पदस्य यथा—

बुद्धिप्रधानान् रुचिराभिधानान् सश्रद्धधानान् जगत. प्रधानान् ।
नानाविधानान्विविधाभिधानान्ददर्श तस्यां पुरि यातुधानान् ॥ (वाल्मीके·)

पञ्चमश्च लाटानुप्रासः ।

शब्दार्थयो· पौनरुक्त्यं भेदे तात्पर्यमात्रतः ।
समादृतो लाटजनैर् लाटानुप्रास उच्यते ॥

यथा—

सत्सङ्गनिरतो वत्स ! भविष्यसि भविष्यसि ।
अथासत्सङ्गगोष्ठीषु पतिष्यसि पतिष्यसि ॥

अथ वा—

श्रिय. पति. श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ (माघस्य)

२ अथ यमकालङ्कारः ।

सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते । (सा. द.)

यथा—

नवपलाशपलाशवन पुर स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभि सुमनोभरै ॥ (माघस्य)

अथ वा

कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसित-समीरणा रणाभियानेन यानेन राजानमभ्युदयाशसमकार्षु । (दण्डिन)

अथ वा प्रयागवर्णने—

देशस्य पूर्वतनदिक्प्रविभागमध्ये दिव्यो विराजति महान् खलु तीर्थराज. ।
तत्र प्रयागनगरे नगरेणुयुक्ता गङ्गा हि पूतसलिलोत्तरत प्रयाति ॥
(सुरेन्द्रनाथस्य)

अथ वा—

ससार तव नि:सार पदवी न दवीयसी ।
अन्तरा दुस्तरा न स्याद्यदि रे मदिरेक्षणा ॥

"यमकादौ भवेदैक्यं डलयो रलयोर्बवो ।
शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयो ।
सबिन्दुकाबिन्दुकयो स्यादभेदप्रकल्पनम्" ॥ इति नयेन

अनयदासनरज्जु परिग्रहे भुजलता जडतामबलाजन ' इति कालिदासीय-पद्याशे न यमकत्वहानि ।

३ अथ वक्रोक्तिरलङ्कार. ।

अन्यस्यान्यार्थक वाक्यमन्यथा योजयेद्यदि ।
अन्य. श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥ (सा.द.)

वक्रोक्ति. द्विधा । श्लेषवक्रोक्ति., काकुवक्रोक्तिश्च ।

क्रमेणोदाहरणम्—

कस्त्व शूली मृगय भिषज नीलकण्ठ प्रियेऽह
केकामेकां वद पशुपतिरह नैव दृश्ये विषाणे ।
मुग्धे स्थाणु स चरति कथ जीवितेश शिवाया
गच्छाटव्यामिति हतवचः पातु वश्चन्द्रचूड ॥

अत्र शूलिनीलकण्ठपशुपतिप्रभृतीना पदानां वक्तुरभिप्रायाद्भिन्नेऽर्थे ग्रहण श्लेषमहिम्ना कृतं बोद्धव्येनातो वक्रोक्ति. ।

अपि च

काले कोकिलवाचाले सहकारमनोहरे ।
कृतागस परित्यागात्तस्याश्चेतो न दूयते ॥

अत्र निषेधार्थे प्रयुक्तो नञ् काक्वा दूयते एवेति विध्यर्थे घटित ।

---

## अथोभयालङ्कारा ।

१ तत्रादौ श्लेषालङ्कार ।

'नानार्थसंश्रय श्लेषो वर्ण्यावर्ण्योभयाश्रित ।' (चन्द्रा)

अथवा 'श्लिष्टै. पदैरनेकार्थाभिधाने श्लेष इष्यते। (सा द.)

यथा

असावुदयमारूढ कान्तिमान् रक्तमण्डल ।
राजा हरति लोकस्य हृदयं मृदुलै करै ॥

अथ वा यथा त्रिवेणीवर्णने—

अस्या सुतीर्थभुवि पुण्यमपूर्वमेव पश्यन्ति ते सुकृतिभारतभारता ये ।
सर्वे सुधर्मनिरता विबुधानुगाश्च चिन्वन्ति सर्वमिह शश्व परत्र लोके ॥

(सुरेन्द्रनाथस्य)

श्लेषश्च द्विविध. सभङ्ग अभङ्गश्च, शब्दश्लेषोऽर्थश्लेषो वा ।

तत्राद्यो यथा—

जनस्थाने भ्रान्त कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्त्तुर्वदनपरिपाटीषु रचना
मयाप्त रामत्व कुशलवसुता नत्वधिगता ॥

अभङ्गश्लेषो यथा—

तया कवितया कि वा तया वनितया च किम् ।
पदविन्यासमात्रेण यया नापहृत मन ॥ (कुव.)

२. पुनरुक्तवदाभासालङ्कार —

पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।
एकार्थतेव शब्दस्य तथा शब्दार्थयोरयम् ॥

भिन्नाकृतेः शब्दस्यैकार्थतेव पुनरुक्ताभासः (हेमचन्द्रः)। भिन्नरूपाणां सार्थकानर्थकानां शब्दानामनेकार्थत्वमापाततः न तु परमार्थतः। पुनरुक्तवदाभासन पुनरुक्तवदाभासो नामालङ्कार.।

यथा—

भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगु ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिव ॥ (सा. द)

———

### अथार्थालङ्कारा.।

अर्थालङ्कारेषु केचित् सादृश्यमूलका., केचित् विरोधमूलका., केचन हेतुमूलका परे च विविध. सन्ति। तत्रादौ सादृश्यमूलका अलङ्कारा विविच्यन्ते।

१ उपमालङ्कारः।

सुन्दरं सादृश्यं वाक्यार्थोपस्कारकमुपमालङ्कृति। (रस)

साधर्म्यमुपमा भेदे इति मम्मटाचार्या। औपम्य हि द्विष्ठ. सम्बन्ध। वर्ण्यस्य केनचित् सधर्मेण साम्यस्य स्थापनमुपमा। उप समीपे मीयते परिच्छिद्यते (उपमानेन उपमेय) अनया सा उपमा। उपमास्थले चोपमेयमुपमान साधारणो धर्म सादृश्यवाचकश्चेति चतुष्टयमपेक्ष्यते। यदुपमीयते तदुपमेय "यथा मुखं चन्द्र इव सुन्दर" मित्यत्र मुखम्। येनोपमीयते तदुपमान यथा तत्रैव चन्द्र। उपमाने उपमेये च सङ्गतो धर्म. (यमधिकृत्योभयत्र सादृश्यं संस्थाप्यते) स साधारणो धर्म.। यथा तत्रैव सुन्दरमिति धर्मः। यत्पदञ्चौपम्यं व्यापयति तदुपमावाचकम्। उपमावाचकाः प्रायेणैते शब्दाः —

इववद्वा यथा शब्दाः समाननिभसन्निभा. ।
तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपका ॥
प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिन. ।
सदृक्सदृशसंवादिसजातीयानुवादिन ॥
प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिता. ।
सलक्षणसदृक्षाभसपक्षोपमितोपमा. ॥
कल्पदेशीयदेश्यादि. प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिन ॥
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ।
विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति ॥

तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ।
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ॥
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ।
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ॥
उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ [काव्यादर्शे]

यत्र चतुर्णामङ्गानां स्थितिः सा पूर्णोपमा ।

यथा—

वातायनानामविशालभावादन्योन्यगण्डार्पितकुण्डलानाम् ।
मुखानि रेजुः प्रमदोत्तमानां बद्धाः कलापा इव पङ्कजानाम् ॥ (अश्वघोषस्य)

अत्र मुखानि उपमेयं, उपमानञ्च पङ्कजानां कलापाः, रेजुरिति साधारणो धर्मः, इवशब्दश्चोपमावाचकः । यथा वा—

गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥ (कुव )

अत्र बुध उपमेयः, उपमानञ्चेश्वरः, इवेत्युपमावाचकः, उत्तरार्धे च साधारणो धर्मः, अत इयं पूर्णोपमा ।

लुप्तोपमा—

वर्ण्योपमानधर्माणामुपमावाचकस्य च ।
एकद्वित्रानुपादानैर्भिन्ना लुप्तोपमाष्टधा ॥ (चन्द्रा.)

यथा—

तडिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्मम ।
कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया ॥
यत्तस्या मेलनं तत्र लाभो मे यश्च तद्रतेः ।
तदेतत्काकतालीयमवितर्कितसम्भवम् ॥ (जयदेवस्य)

अत्र तडिद्गौरीत्यत्र वाचकलोपः, इन्दुतुल्यास्येत्यत्र धर्मलोपः, कर्पूरन्तीत्यत्र धर्मवाचकोभयलोपः, स्मरवधूयन्तीत्यत्र वाचकोपमेयलोपः, काकतालीयमित्यत्रोपमानलोपः, अवितर्कितसम्भवमित्यत्र धर्मोपमानलोपश्च । त्रिलुप्ता च "राजते मृगलोचना" इत्यत्र ।

मालोपमा—

मालोपमा यदेकस्योपमानं बहु दृश्यते । (सा. द.)

यथा—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्ग. ।
संस्कारवत्या च गिरा मनीषी तया स पूतश्च विभूषितश्च ॥ (कालिदासस्य)

२. अनन्वयालङ्कार. ।

उपमानोपमेयत्वमेकस्यैव त्वनन्वय । (सा द )

द्वितीयसदृशव्यवच्छेद एव फलमत्र सादृश्यवर्णनस्य ।

यथा गङ्गास्तवे—

कृतक्षुद्राघौघानथ सपदि सन्तप्तमनस
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहा. ।
अपि प्रायश्चित्तप्रसरणपथातीतचरितान्
नरानूरीकर्तुं त्वमिव जननि ! त्वं विजयसे ॥ (जगन्नाथस्य)

यथा वा—

गगन गगनाकार सागर. सागरोपम ।
रामरावणयोर्युद्ध रामरावणयोरिव ॥ (कुव )

३ उपमेयोपमालङ्कार ।

पर्यायेण द्वयोरेतदुपमेयोपमा मता । (सा द )

तृतीयसदृशव्यवच्छेद एव फलमत्र सादृश्यवर्णनस्य ।

यथा—

हास प्रसूनमिव हासमिव प्रसूनं
पाणिः प्रवाल इव पाणिरिव प्रवाल' ।
केशो द्विरेफ इव केश इव द्विरेफ.
सा भाति वीरुदिव सेव विभाति वीरुत् ॥ (विद्याधर )

अत्र परस्परमुपमानोपमेयभावमापन्नयोरर्थयो सुन्दर सादृश्यमत एवोपमेयोपमा ।

यथा वा—

रमणीयस्तवकयुता विलसितवक्षोजयुगलशालिन्य ।
लतिका इव ता वनिता वनिता इव रेजिरे लतिका ॥

सादृश्यवर्णने द्वितीयसदृशव्यवच्छेदकत्व फलमनन्वयालङ्कारे, तत्र च तृतीयसदृशव्यवच्छेदफलकत्वमुपमेयोपमायामित्येवानयोरलङ्कारयोर्भेदः ।

४ स्मरणमलङ्कार. ।

सदृशानुभवाद्वस्तुस्मृति· स्मरणमुच्यते (सा द.)

सादृश्यज्ञानोद्बुद्धेन सस्कारेण प्रयोज्य स्मरणमेव काव्ये सौन्दर्येण प्रतिपादितं सत् स्मरणालङ्कारतां भजते । यथा—

अगाधं परित. पूर्णमालोक्य स महार्णवम् ।
हृदय रामभद्रस्य सस्मार पवनात्मजः ॥

यथा वा

दिव्यानामपि कृतविस्मयां पुरस्तादम्भस्त· स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरि. ॥

५ उदाहरणमलङ्कारः ।

सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव· उच्यमान उदाहरणम् । (रस.)

यथा—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दो. किरणेष्विवाङ्कः ।

अत्र हिमाद्रेर्वर्णने नैकरत्ननिधेस्तस्य सौन्दर्यापहारकं हिमं नाभूदिति प्रतिपाद्यम्, तमर्थं समर्थयितु कविर्गुणसमवाये दोषस्यैकस्य विलीनत्वं ख्यापयत् सामान्य वच उपादत्ते, अमु सामान्यमर्थं झगिति स्वीकार्यतां नेतुमुदाजहार कविर्यशा चन्द्रस्य मयूखेषु कलङ्को निमज्जतीति। अत्रौपम्ये चमत्काराभावादवयवावयविभावे च सौन्दर्यदर्शनाद्भिन्नोऽयमलङ्कार. ।

अयमेव विकस्वरालङ्कारोऽप्युच्यते ।

यथा वा

अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनराजो गन्धेनोग्रेण लशुन इव ॥ (जगन्नाथस्य)

न चात्र पदार्थलशुनयोरुपमा शक्यते वक्तुम्, तयो. सामान्यविशेषभावेन सादृश्यस्यानुल्लासात् पोष्यपोषकत्वेन चावयवावयविभावेनार्थोद्बोधकत्वात् ।

६. प्रतीपमलङ्कारः —

प्रतीपमुपमानस्योपमेयत्वप्रकल्पनम् । (चन्द्रा०)

प्रसिद्धस्योपमानस्य उपमेयत्वरूपप्रातिलोम्यात्प्रतीपमलङ्कारः ।

यथा -   यत्वन्नेत्रसमानकान्ति सलिले मग्न तदिन्दीवरं
मेघैरन्तरित· प्रिये ! तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ (श्री हर्षस्य)

अत्र नेत्रस्य प्रसिद्ध यदुपमानमिन्दीवर तन्नेत्रेणोपमीयते, एवमेव शशी मुखेनोपमीयते, राजहंसस्य गतिश्च नायिकाया गत्यात्रोपमीयते अत एव उपमानोपमेयभावस्य प्रातिलोम्यात् प्रतीपालङ्कार ।

द्वितीयं प्रतीपम्—

प्रतीपमुपमानस्य कैमर्थ्यमपि मन्वते ।

उपमेयस्य सद्भावे उपमानस्य निरर्थकत्वप्रतिपादनादयमलङ्कार· ।

यथा —

तदोजसस्तद्यशस स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।
तनोति भानो परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥ (श्रीहर्षस्य)

अत्रोपमेययोर्महाराजनलस्यौजोयशसोः स्थितिवशादुपमानयो सूर्याचन्द्रमसो· व्यर्थत्वख्यापनात्प्रतीपमलङ्कारः ।

तृतीय प्रतीपम्—

उक्त्वा चात्यन्तमुत्कर्षमप्युत्कृष्टस्य वस्तुन· ।
कल्पितेऽप्युपमानत्वे प्रतीप केचिदूचिरे ॥ (सा. द.)

यथा—

अहमेव गुरुः सुदारुणानामिति हालाहल ! मा स्म दृप्य· ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥

७. रूपकमलङ्कार· ।

तद्रूपकमभेदो य उपमानोपमेययोः । (का प्र )

उपमानोपमेययोरतिसाम्यात्तिरोभूते भेदे रूपकमलङ्कृति । रूपकं तावत्त्रिविध साङ्गं निरङ्ग परम्परितञ्च । तेषु साङ्ग द्विविध समस्तवस्तुविषयम्, एकदेशविवर्ति च । निरङ्गमपि द्विविधं शुद्ध मालारूपञ्च, परम्परितञ्च श्लिष्टमश्लिष्टमिति द्विप्रकारक भवति । तत्र क्रमेण उदाहरणम् ।

साङ्गस्य प्रथमो भेदः—परस्परसापेक्षनिष्पत्तिकानां रूपकाणां सङ्घाते साङ्गं रूपकम् । तत्र च समस्तविषयाणामुपादानात् समस्तवस्तुविषयकम् ।

यथा—

सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे ।
वदनपरिपूर्णचन्द्रे सुन्दरि ! राकासि नात्र सन्देहः ॥

अत्र ताराचन्द्रिकाचन्द्रप्रभृतीनां समेषामवयवानामुपादानादत्र समस्तुवस्तुविषयक रूपकम् ।

यथा वा—

योगे योगेययोगः शुभविमलमनोनूरुणा प्रेर्यमाणैः
षट्शास्त्रोपेतवेदप्रजवनतुरगैः सप्तभिर्वाह्यमाने ।
सौवर्णे ज्ञानचक्रे ध्वजवति यशसा चन्द्रथे बुद्धिरश्मौ
राजन् सत्सूरिसूरो हृदयतिमिरहाऽद्योतत द्योतयँश्च ॥ (सुरेन्द्रनाथस्य)

अत्र सूरेः सूरेणाभेदे समस्तावयवानां प्रकल्पनात्साङ्गं रूपकम् ।

साङ्गस्य द्वितीयो भेद. —

एकदेशविवर्ति रूपकमेकदेशे कस्मिंश्चिदवयवे विशेषेण स्फुटतया वर्तनादेकदेशविवर्ति । तद्यथा—

विशालविषयाटवीवलयलग्नदावानल-
प्रसृत्वरशिखावलीविकलितं मदीयं मन. ।
अमन्दमिलिदिन्दिरे निखिलमाधुरीमन्दिरे
मुकुन्दमुखचन्दिरे चिरमिदञ्चकोरायताम् ॥ (जगन्नाथस्य)

निरङ्गं केवलस्यैव रूपणम् । तत्र शुद्ध यथा—

दासे कृतागसि भवेदुचित. प्रभूणां
पादप्रहार इति सुन्दरि ! नास्मि दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै
र्यत्खिद्यते मृदुपद ननु सा व्यथा मे ॥

तत्र मालारूपकञ्यथा —

वज्रं पापमहीभृतां भवगदोद्रेकस्य सिद्धौषधं
मिथ्याज्ञाननिशाविशालतमसस्तिग्मांशुबिम्बोदयः ।
क्रूरक्लेशमहीरुहामुरुतरज्वालाजटालः शिखी
द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम् ॥
(जगन्नाथस्य)

यत्र कस्यचिदारोपः परारोपणकारणम् ।
तत्परम्परितं श्लिष्टाश्लिष्टनिबन्धनम् ॥ (सा द)

तत्राश्लिष्टपरम्परितं यथा -

कृष्ण ! त्वदीयपदपङ्कजपञ्जरान्तमद्यैव मे विशतु मानसराजहंसः ।
प्राणप्रयाणसमये कफवातपित्तैः कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥
(कुलशेखरस्य)

श्लिष्टपरम्परितं रूपकं यथा—

पद्मोदयदिनाधीशः सदागतिसमीरणः ।
भूभृदावलिदम्भोलिरेक एव भवान् भुवि ॥

अत्र पद्माया उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनं भूभृतो राजान एव पर्वता इत्याद्यारोपः सूर्यत्वारोपनिमित्तम् ।

## ८ परिणामालङ्कारः ।

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना । (चन्द्रा.)

यत्रारोप्यमाणः प्रकृतार्थोपयोगित्वेन निबध्यमानः स्वतस्तस्य तदुपयोगित्वासम्भवात् प्रकृतात्मना परिणतिमपेक्षते तत्र परिणामालङ्कारः । यथा—

"प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा।" इत्यत्र वीक्षणव्यापारेऽब्जस्यानुपयोगित्वादब्जस्य दृशि परिणतिरस्तीति परिणामः । यथा वा—

अपारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमते ।
परिश्रान्तस्यायं तरणितनयातीरनिलयः
समन्तात्सन्तापं हरिनवतमालस्तिरयतु ॥ (जगन्नाथस्य)

अत्र भगवदात्मतयैव तमालस्य संसारतापनिवर्तनक्षमत्वम् ।

## ९ ससन्देहालङ्कारः ।

सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।
शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा । (सा. द.)

यत्र संशय एव पर्यवसानं स शुद्धः । यथा—

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे ! नियतमिन्दुसुधामृणाल-
ज्योत्स्नादिकारणमभून्मदनश्च वेधाः ॥ (भवभूतेः)

यत्रादावन्ते च संशयः, केवलं मध्यनिश्चयः स निश्चयगर्भः । यथा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुनः
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥

यत्रादौ संशयोऽन्ते च निश्चय स निश्चयान्तः। यथा—

चपला जलदाच्च्युता लता वा तरुमुख्यादिति संशये निमग्न ।
गुरुनिःश्वसितैः कपिर्मनीषी निरणैषीदथ ता वियोगिनीति ॥

१०. भ्रान्तिमानलङ्कार ।

साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थित । (सा.द)

ससन्देहालङ्कारे केवल संशय एव, अत्र तु संशयान सन्देहबलात्तत्परिणामिनि कस्मिन्नपि कर्मणि व्याप्रियत इत्युभयोर्भेद । भ्रान्तिमत्यलङ्कारे व्यापारावधिक परिणाम । यथा—

महाराज श्रीमन्! जगति यशसा ते धवलिते
कपर्दी कैलास करिवरमथार्यं कुलिशभृत् ।
पय पारावार परमपुरुषोऽय मृगयते
कलानाथं राहुः कमलभवनो हंसमधुना ॥

यथा वा

मुग्धा दुग्धधिया गवां विदधते कुम्भानधो बल्लवाः
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।
कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ।

११. उल्लेखालङ्कार ।

एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते। (सा. द.)

स च गृहीतृभेदात् विषयभेदाच्च द्विविधः —

तत्राद्य यथा —

यस्तपोवनमिति मुनिभि यमनगरमिति शत्रुभिः चिन्तामणिरित्यर्थिभिः गुरुकुलमिति विद्यार्थिभिः, महोत्सवसमाज इति चारणै वसुधारेति च विप्रैरगृह्यत । (बाणभट्टस्य)

यथा वा—

गजत्रातेति वृद्धाभिः श्रीकान्त इति यौवतैः ।
यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ॥

द्वितीयं यथा--

दीनव्राते दयार्द्रा निखिलरिपुकुले निर्दया किञ्च मूढ़ी
काव्यालापेषु तर्कप्रतिवचनविधौ कर्कशत्व दधाना।
लुब्धा धर्मेष्वलुब्धा वसुनि परविपद्दर्शने कान्दिशीका
राजन्नाजन्मरम्या स्फुरति बहुविधा तावकी चित्तवृत्ति.॥

(जगन्नाथस्य)

अत्र दीनव्रातादीनां विषयाणामनेकत्वाच्चित्तवृत्तेरनेकविधत्वदर्शनादुल्लेखालङ्कार ।

यथा वा

कातरा. परदु.खेषु निजदु खेष्वकातरा. ।
अर्थेष्वलोभ्म यशसि सलोभाः सन्ति साधव· । (जगन्नाथस्य)

उल्लेखालङ्कार रूपकयोगी क्वचिद् भवति । यथा—

दीनाना कल्पवृक्ष. स्वगुणफलवतः सज्जनानां कुटुम्बी
आदर्श. शिक्षितानां सुचरितनिकष शीलवेलाम्बुद्र ।
सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्वो
ह्येकः श्लाघ्य स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये॥

(शूद्रकस्य)

१२. अपह्नुतिरलङ्कार. —

शुद्धापह्नुतिरन्यस्यारोपार्थो धर्मनिह्नवः। (सा द)

यथा—

अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्क परे मेनिरे
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन् परे ।
इन्दोर्यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशिपीतमन्धतमसं कुक्षिस्थमाचक्ष्महे ॥

अपि च सा

अन्यत्र तस्यारोपार्थ पर्यस्तापह्नुतिः स्मृता।

यथा—

हालाहलो नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्वते ।
निपीय जागर्ति सुखेन त शिवः स्पृशन्निमां मुह्यति निद्रया हरिः ॥

भ्रान्तापह्नुतिरन्यस्य शङ्कायां भ्रान्तिवारणे ।

यथा—

जटानेयं वेणी कृतकचकलापो न गरलं
गले कस्तूरीयं शिरसि शशिलेखा न कुसुमम् ।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा
पुरारातिभ्रान्त्या कुसुमशर ! किं मां प्रहरसि ॥

तथा च सा।

छेकापह्नुतिरन्यस्य शङ्कातस्तथ्यनिह्नवे ।

यथा—

सीत्कारं शिक्षयति व्रणयत्यधरं तनोति रोमाञ्चम् ।
नागरिकः किं मिलितो नहि नहि सखि ! हैमनः पवनः ॥

परञ्च सा

कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुतैः पदैः ।

कैतवव्याजकपटमिषच्छलादीनि निह्नवसूचकानि पदानि । यथा—

बत सखि ! कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथा हि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥

अत्र हि सभृङ्गाणि सहकाराण्येव न, अपि तु सकालकूटाः शरा इति प्रतीतिः ।

यथा वा—

शशिमयं दहनास्त्रमुदित्वरं मनसिजस्य विमृश्य वियोगिनी ।
झटिति वारुणमश्रुमिषादसौ तदुचितं प्रतिशस्त्रमुपाददे ॥ (श्रीहर्षस्य)

१३. उत्प्रेक्षालङ्कारः ।

सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् । (का. प्र.)

प्रकृतमात्मनः समयतीति समम् उपमानम् । प्रकृतञ्च उपमेयम् । उत्कटा प्रकृष्टस्योपमानस्य ईक्षा ज्ञानमेवोत्प्रेक्षा । सम्भावनञ्च उत्कटकोटिकः संशयः । संशये निश्चितप्रायत्वमेवोत्कटत्वम् यथा मुखं चन्द्रं मन्ये इत्यत्र वदनमिदं चन्द्रोऽयं वेतिस्थले चन्द्रत्वप्रकल्पनरूपं नाम सम्भावनम्, तत्र

चोपमेयस्योपादानेऽपि उपमानेनाधःकृतत्वं स्फुटमेव। रूपकालङ्कारे मुखत्व-चन्द्रत्वयोरभेदादुपमेयस्योपमानत्वेनावधारणमस्तीति प्रतिपादितम्, ससन्देहे च समकोटिकः संशयः, उत्प्रेक्षायाञ्चोपमानकोटिकः संशयः इति परस्पर भेदः। इयञ्चोत्प्रेक्षा "इव ध्रुवं प्रायो नूनं मन्ये शङ्के अवैमि जाने तर्कयाम्यूहे उत्प्रेक्षे" इत्यादिभिः प्रतिपादकैः वाच्या भवति। यदुक्तं हि दण्डिना—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः॥

विषयस्योपादानेऽपि अध करणरूपोत्प्रेक्षा यथा—

दृष्टिस्तृणीकृतजगत्त्रयसत्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव॥

उपसर्पन्तं लवं विलोक्य तत्र वीररसत्वं सम्भाव्योपमेयस्य लवस्याधःकरणम्। एवमेव गत्या धरित्र्या अनमितत्वेऽपि नमितत्वोक्तेः उत्कटकोटिक-संशयोत्पत्तिः अत एव वाच्या क्रियोत्प्रेक्षा, परञ्च प्रथमपादे सत्वसारस्या-तृणीकृतत्वेऽपि तृणीकृतत्वोक्त्या तादृशसंशयोदयात् प्रतीयमानः क्रियोत्प्रेक्षालङ्कारः।

सा च उत्प्रेक्षा तत्प्रतिपादकपदप्रयोगे वाच्या, अन्यथा प्रतीयमाना यथोदाहृता। परञ्च सम्भावनं द्रव्यविषयकं, हेतुविषयकं क्रियाविषयकञ्च भवितुं शक्यते। क्रमेणोदाहरणम्।

द्रव्योत्प्रेक्षा यथा—

प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतः।
अद्याप्यानन्दयति मां, त्वं पुनः क्वासि नन्दिनि?

हेतूत्प्रेक्षा यथा—

सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम्॥ (कालि.)

अत्र मौनहेतुत्वेन नूपुरे विश्लेषदुःखमुत्प्रेक्ष्यते।

फलोत्प्रेक्षा यथा—

दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती ।
वक्षोजतायै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा ॥

अत्राम्बुजानां तपश्चरणस्य फलं वक्षोजतावाप्तिरूपमुत्प्रेक्ष्यते ।

क्रियोत्प्रेक्षा यथा—

क्षपां क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व सम्प्रत्युष्णांशुर्गत इति तदन्वेषणपरा-
स्तडिद्दीपालोका दिशि दिशि चलन्तीव जलदा ॥ (पाणिने)

अत्र जलदानां सापराधस्यान्वेषणकार्यमुत्प्रेक्ष्यते ।

१४ अतिशयोक्तिरलङ्कारः ।

विषयस्यानुपादानाद्विषय्युपनिबध्यते ।
यत्र सातिशयोक्तिः स्यात्कविप्रौढोक्तिजीविता । (चि मी.)

यथा —

उपप्राकाराग्रं प्रहिणु नयने तर्कय मना-
गनाकाशे कोऽयं गलितहरिणः शीतकिरणः ।
सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरञ्ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ॥ (राजशेखरस्य)

अत्र विषयस्यानुपादानं परञ्च केवलं विषयिणः शीतकरणस्योपनिबन्धाद् वर्ण्यस्य वदनस्याध्यवसायः अत एवातिशयोक्तिः ।

अन्यरूपा अतिशयोक्ति

प्रस्तुतस्य यदन्यत्वं[1] यद्यर्थोक्तौ च कल्पनम्[2] ।
कार्य्यकारणयोर्यश्च पौर्वापर्य्यविपर्य्ययः[3] ॥
विज्ञेयातिशयोक्तिः सात्वन्यैव प्रथमोक्तत ॥

(का. प्र.)

(१) तत्र प्रस्तुतस्य अन्यत्वख्यापनरूपा यथा —

अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः ।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम् ॥

अत्र अङ्गलावण्यादीनामन्यप्रकारत्वस्य प्रख्याप्य अभेदेऽपि भेदोक्तिरूपातिशयोक्तिः ।

(२) यदिशब्देन तत्पर्यायान्तरेण वा यद्यर्थस्य प्रतिपादने कस्यचिद-
सम्भविनोऽर्थस्य प्रस्तुतेन सह सम्बन्धकल्पन यद्यर्थातिशयोक्तिः।

यथा—

पुष्प प्रवालोपहित यदि स्यान् मुक्ताफल वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्य्याद्विशदस्य तस्यास्ताम्रौष्ठपर्य्यस्तरुच स्मितस्य ॥ (कालि.)

(३) कार्यनियतपूर्ववृत्तित्वं नाम कारणत्वम्. कारण पूर्वं तत्परवर्त्ति च कार्यम्, कार्य्यकारणयो पौर्वापर्य्यसम्बन्धे विपर्य्यय प्राप्ते सति पौर्वापर्य्यविपर्य्ययरूपातिशयोक्ति । तच्च पौर्वापर्य्यविपर्य्यय द्विधा भवति, पूर्वकालिकत्वे कार्यस्य, समकालत्वे वा द्वयो । क्रमेण यथा—

उदेति पूर्वं कुसुम तत· फल घनोदय प्राक् तदनन्तर पय ।
निमित्तनैमित्तकयोरय क्रमस्तव प्रसादस्य पुरस्तु सम्पद· ॥ (कालि.)

अत्र सम्पत्तिलाभरूपकार्यस्य महर्षिप्रसादरूपकारणात् प्राक्तनत्वं प्रतिपादितम् ।

सममेव समाक्रान्त द्वयं द्विरदगामिना ।
तेन सिंहासन पित्र्यमखिलञ्चारिमण्डलम् ॥ (कालि.)

अत्र राज्यसिंहासनस्यारिवर्गस्य चोभयो युगपदेव समाक्रमण वर्णितम् ।

१५. तुल्ययोगितालङ्कार ।

पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्माभिसम्बन्ध स्यात्तदा तुल्ययोगिता ॥ (सा द.)

केवल प्रस्तुतानामेव पदार्थानामथवा केवलमप्रस्तुतानामेव एकेन गुणक्रियादिरूपधर्मेण अभिसम्बन्धे सति तुल्ययोगितालङ्कार । तुल्यानां समकक्षाणां प्रस्तुताना अप्रस्तुतानां वा एकस्मिन् धर्मेऽन्वयरूपे योगे कृते सत्ययमलङ्कार., अथवा तुल्येन समानेन केनचिद् धर्मेण अनेकेषां सदृशानां पदार्थानामन्वये तुल्ययोगितालङ्कार· । तुल्याना कारकाणां तुल्येन धर्मेण योग· सम्बन्धस्तुल्ययोगः तद्वानयमलङ्कारः ।

प्रस्तुतानां कारकाणामेकक्रियान्वयरूप एकधर्माभिसम्बन्धो यथा —

यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ (कालि.)

अत्र हिमालयवर्णने तत्रस्थानां रत्नानां महौषधीनाञ्च प्राकरणिकत्वात्तेषां दोहनकर्मणि सम्बन्धख्यापनात्तुल्ययोगिता ।

प्रस्तुतानामेकगुणाभिसम्बन्धो यथा—

न्यञ्चति वयसि प्रथमे समुदञ्चति किञ्च तरुणिमनि सुदृशः ।
उल्लसति कापि शोभा वचसाञ्च दृशाञ्च विभ्रमाणाञ्च ॥

अप्रस्तुतानां कारकाणां यथा—

नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥ (कालि)

अत्र नागेन्द्रहस्तस्य कदलीविशेषस्य चाप्रस्तु[illegible]त्वरूपैकधर्माभिसम्बन्धात्तुल्ययोगिता ।

१६. दीपकमलङ्कारः ।

अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते ।

अप्रस्तुतप्रस्तुतयोः प्राकरणिकानामप्राकरणिकानाञ्च कारकाणां एकधर्माभिसम्बन्धे विहिते दीपकालङ्कारः । दीप इव दीपकम् । प्रकृताप्रकृतप्रकाशकत्वेन दीपसादृश्यम् ।

यथा—

बलावलेपादधुनापि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा ।
सती च योषित्प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥
(माघस्य)

अस्मिन् माघपद्ये प्रतिनायकस्य प्रकृतिवर्णनं प्रस्तुतं तेन सह साध्वीयोषितोऽपि जन्मान्तरानुगमनरूपेणैकधर्मेणाभिसम्बन्धाद्दीपकालङ्कारः ।

यथा वा—

अमृतस्य चन्द्रिकाया ललितायाश्चापि कवितायाः ।
सुजनस्य च निर्माणं जनयति नहि कस्य सन्तोषम् ॥

कारकदीपकमलङ्कारः ।

अथ कारकमेकं स्यादनेकासु क्रियासु चेत् । (सा द)

अनेकासु क्रियासु एकस्य कारकस्यान्वये कृते सति अपरमियं दीपकम् । तच्च कारकदीपकनाम्ना पूर्वस्माद्विशिष्यते ।

यथा—

दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरन्तनमघञ्चुलुकीकरोति ।
भूतेषु किञ्च करुणां बहुलीकरोति
सङ्गः सतां किमु न मङ्गलमातनोति ॥

अत्र सतां सङ्गस्यानेकाभिः क्रियाभिरन्वयः ।

१७. प्रतिवस्तूपमालङ्कार ।

प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः ।
एकोऽपि धर्म्मः सामान्यो यत्र निर्द्दिश्यते पृथक् ॥ (सा द)

यत्र उपमानोपमेयोभयसाधारणो धर्मः गुणः तादृशी क्रिया वा एकार्थक-भिन्नानुपूर्वीकशब्देन निर्दिश्यते सा प्रतिवस्तूपमा ।

यथा—

धन्यासि वैदर्भि ! गुणैरुदारैर्
यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति ॥ (श्रीहर्षस्य)

यथा वा—

तवामृतस्यन्दिनि पादपङ्कजे
निवेशितात्मा कथमन्यदिच्छति ।
स्थितोऽरविन्दे मकरन्दनिर्भरे
मधुव्रतो नेक्षुरसं समीक्षते ॥ (कुलशेखरस्य)

अत्र भगवच्चरणनीरजयोर्दृढस्थितिरन्यन्नेच्छति यथाऽरविन्दे स्थितो भ्रमरो नेक्षुरसं समीक्षत इति गम्यसाम्यमुभयोर्वाक्ययोर्वस्तुप्रतिवस्तुभावभाप-न्नयोरस्तीति प्रतिवस्तूपमालङ्कारः ।

वैधर्म्येणापि प्रतिवस्तूपमा सम्भवति यथा

गीर्भिर्गुरूणां परुषाक्षराभिस्
तिरस्कृता यान्ति नरा महत्त्वम् ।
अलब्धशाणोत्कषणा नृपाणां
न जातु मौलौ मणयो वसन्ति ॥ (जगन्नाथस्य)

१८ दृष्टान्तालङ्कार ।

दृष्टान्तस्तु सधर्मस्य वस्तुन प्रतिबिम्बनम् । (सा. द )

बिम्बप्रतिबिम्बभावमापन्नयो. सधर्मयोर्वस्तुनो. प्रतिपादने दृष्टान्तालङ्कार । सधर्मस्य समानधर्मस्य वस्तुनो विषयस्य प्रतिबिम्बन नाम प्रणिधानेन गम्यसाम्यत्वम् ।

यथा—

सत्पूरुष खलु हिताचरणैरमन्द
मानन्दयत्यखिललोकमनुक्त एव ।
आराधित कथय केन करैरुदारै-
रिन्दुर्विकासयति कैरविणीकुलानि ॥

अत्रानन्दनविकासयो: बिम्बप्रतिबिम्बभाव ।

यथा वा—

काम नृपा सन्ति सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रि.॥

अत्र राजन्वतीज्योतिष्मतीत्यनयो बिम्बप्रतिबिम्बभाव ।
वैधर्म्येणापि प्रतिबिम्बनं शक्यम् । तद्यथा—

जनयन्ति परप्रीति नरा सत्कुलसम्भवा. ।
न हि कारस्कर. क्वापि तापनिर्वापणक्षम ॥

अथ वा

मानुषीभ्य कथ नु स्यादस्य रूपस्य सम्भव. ।
न प्रभातरल ज्योतिरुदेति वसुधातलात् ॥ (कालि.)

दृष्टान्तस्य प्रतिवस्तूपमया भेदकमेतदेव यत्प्रतिवस्तूपमायां धर्मो न प्रतिबिम्बितो भवति परन्तु शुद्धसामान्यात्मना धर्मः स्थितो भवति, दृष्टान्ते तु धर्मः प्रतिबिम्बित एव ।

१९ निदर्शनालङ्कार:—

अभवन्वस्तुसम्बन्ध उपमापरिकल्पकः ।
निदर्शना भवेत् सेय भट्टमम्मटसम्मता ॥

यत्र वस्तुनोरभवन्सम्बन्ध एव स्थाप्यते यथा तयोरौपम्यभावे पर्यवसान तत्र निदर्शनालङ्कारः ।

यथा—

इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥ (कालि.)

अन्यदीयस्य धर्मस्यान्येन केनचिदुपादानेऽपि निदर्शनालङ्कारः । यथा—

अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥ (कालि.)

अत्र स्थलारविन्दस्य शोभायाः धारणं पार्वतीचरणाभ्यां विहितमिति अभवन्वस्तुसम्बन्धः ।

इयं निदर्शना मालारूपेणापि भवितुं शक्या । यथा—

अरण्यरुदितं कृतं शवशरीरमुद्वर्त्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषिरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतो
धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥ (कुव.)

अत्राबुधजनसेवाया अरण्यरोदनादिभिरैक्यं तथा स्थापितं यथा प्रकृतस्याबुधजनसेवनस्याप्रकृतैररण्यरोदनादिभिरौपम्यं सिद्ध्यति ।

अन्यद्वा—

ते धत्तूरतरुं वपन्ति भवने प्रोन्मूल्य कल्पद्रुमं
चिन्तारत्नमपास्य काचशकलं स्वीकुर्वते ते जडाः ।
विक्रीय द्विरदं गिरीन्द्रसदृशं क्रीणन्ति ते रासभं
ये लब्धं परिहृत्य धर्ममधमा धावन्ति भोगाशया ॥

## २० अर्थान्तरन्यासालङ्कारः ।

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥ (का. प्र.)

यत्र साधर्म्येण अथ वा वैधर्म्येण सामान्यं विशेषेण समर्थ्यते अथ वा विशेषो वा सामान्येन समर्थ्यते सयुक्तिकं दृढीक्रियते तत्रार्थान्तरन्यासो नामालङ्कारः ।

सामान्यविशेषवस्तुनोः समर्थ्यसमर्थकभावमापन्नयोः वर्णनेऽर्थान्तरन्यासः । वस्तुप्रतिवस्तुभावमापन्ने तु वस्तुद्वये प्रतिवस्तूपमा । बिम्बप्रतिबिम्बभावमापन्नयोः सामान्ययोः विशेषयोर्वा वस्तुनोः प्रतिपादने दृष्टान्तः इति भेदकम् ।

सामान्यस्य विशेषेण समर्थनेऽर्थान्तरन्यासो यथा—

बृहत्सहाय कार्यान्त क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगाऽपगा ॥ (माघस्य)

अत्र द्वितीयार्धे प्रतिपादितो विशेषार्थः पूर्वार्धगत सामान्यमर्थ समर्थयति ।

विशेषस्य सामान्येन समर्थन यथा —

क्रियासु युक्तैर्नृपचारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभि ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वच. ॥ (भारवेः)

वैधर्म्येणार्थान्तरन्यासो यथा—

अर्थं सप्रतिबन्ध प्रभुरधिगन्तु सहायवानेव ।
दृश्य तमसि न पश्यति दीपेन विना सचक्षुरपि ॥

यथा वा

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥ (कालि )

२१ तद्गुणालङ्कार —

तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रह । (चन्द्रा.)

यत्र आत्मन गुणस्य त्यागं कृत्वा परकीयस्य गुणस्य ग्रहणं वर्ण्यते तत्र तद्गुणालङ्कार. ।

यथा—

जगाद वदनच्छद्मपद्मपर्यन्तपातिन ।
नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभि. ॥ (माघस्य)

अत्र भ्रमरै स्वकीयं श्यामगुणं परित्यज्य तदपेक्षया अत्युत्कृष्टश्वैत्य-गुणग्रहणात्तद्गुणालङ्कार. ।

यथा वा—

नीतो नासान्तिकं तन्व्या मालत्या. कुसुमोत्कर ।
बन्धूकभावमानिन्ये रागेणाधरवर्तिना ॥ (जगन्नाथस्य)

२२ अतद्गुणालङ्कार ।

सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् । (चन्द्रा)

सन्निधानादिरूपे हेतौ सत्यपि परकीयगुणाग्रहणे वर्णिते सति अतद्गुणोऽलङ्कार । गुणग्रहणे तद्गुणः अग्रहणेऽतद्गुण इत्यनयोर्भेद. ।

यथा—

हन्त ! सान्द्रेण रागेण भृतेऽपि हृदये मम ।
गुणगौर ! निविष्टोऽपि कथं नाम न रज्यसि ॥

अत्र रक्तिमपूर्णहृदयान्त.स्थितिरूपे कारणे वर्त्तमानेऽपि तदीयरक्तिम्नो ग्रहणाभावादतद्गुण. ।

२३ समासोक्तिरलङ्कार: ।

यत्रोक्ताद्गम्यतेऽन्योऽर्थस्तत्समानविशेषण. ।
सा समासोक्तिरुदिता संक्षेपार्थतया बुधै. ॥ (अ पु)

यत्र समै. विशेषणैः कार्यै. लिङ्गै· हेतुभिर्वा प्रस्तुतात् अप्रस्तुताद्वा तदन्य अर्थ. व्यञ्जनया गम्यते तत्र समासोक्तिरलङ्कार. । समासेन सङ्क्षेपेण उक्तिर्यत्र सा समासोक्ति ।



यथा—

श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो बभु ।
उपवनान्तलता. पवनाहतैः
किसलयैः सलयैरिव पाणिभि. ॥ (कालि.)

अत्र विशेषणाना साम्यात् कार्य्यस्य च साम्यात प्रकृताद्वनलतावर्णनाद्-प्रकृतो नर्त्तकीरूपोऽर्थो व्यक्तया गम्यते इति समासोक्तिरलङ्कार. ।

यथा वा—

उल्लासकालकरवालमहाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन ।
निर्वापित: सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितः प्रताप. ॥ (अ. कौ.)

२४. अप्रस्तुतप्रशंसालङ्कार ।

अप्रस्ततुप्रशंसा सा स्यादपक्रान्तेषु या स्तुति· । (का. द)

अप्रस्तुताद्वाच्यात्प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसा नामालङ्कार । अप्रक्रान्तेषु अप्रस्तुतेषु उक्तेषु सत्सु यदा प्रस्तुतानां कथन सम्भवति तत्राप्रस्तुतप्रशंसा । यथा माघपद्ये

पादाहत यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रज ॥

अत्र अप्रस्तुतस्य रजसः प्रशंसया प्रस्तुतस्य वर्णनम् ।

यथा वा—

सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ।
अन्नै रयत्नसुलभैस्तृणदर्भाङ्कुरादिभि. ॥

अत्र मृगाणां सुखजीवनस्याप्रस्तुतस्य कथनेन राजकीयसेवापरायणस्य गर्हितत्व प्रख्याप्यते ।

यत्राप्रकृतेन प्रकृतार्थबोधन तत्राप्रस्तुतप्रशंसा, प्रकृतेनाप्रकृतार्थबोधन तु समासोक्तिरिति सामान्यतो विवेक ।

२५. व्यतिरेकालङ्कार. ।

उपमानाद्यदन्यस्य व्यतिरेक. स एव स. । (का प्र.)

उपमानाद् यत्र उपमेयस्याधिक्यं वर्ण्यते तत्र व्यतिरेक. । उपमेयस्योत्कर्षवर्णनेनाथवोपमानस्यापकृष्टत्ववर्णनेन व्यतिरेकः स्थाप्यते ।

यथा—

चन्द्र गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मी. ॥ (कालि.)

अत्रोपमेयस्य पार्वतीमुखस्य प्रसिद्धोपमानयोश्चन्द्रपद्मयोरपेक्षया समुत्कर्षप्रतिपादनाद्व्यतिरेकालङ्कारः ।

२६ सहोक्तिरलङ्कारः—

सह समभिव्याहारात्सहोक्तिरुभयान्विते धर्मे । (अ कौ.)

सहादिपदसन्निधानाद्यत्र धर्मवाचकपदस्य विशेष्यविशेषणोभयान्वितार्थबोधकत्वं तत्र सहोक्तिः ।

यथा—

समभेव नराधिपेन सा गुरुसम्मोहविलुप्तचेतना ।
अगमत् सह तैलबिन्दुना तनुदीपार्चिरिव क्षितेस्तलम् ॥ (कालि.)

यथा वा—

पुरोपनीतं नृप ! रामणीयकं द्विजातिशेषेण यदेतदन्धसा ।
तदद्य ते वन्यफलाशिन. पर परैति कार्श्यं यशसा समं वपुः ॥

(भारवेः)

अत्र युधिष्ठिरस्य वपुः यशसा सम कृशतां भजतीति उभयस्य क्षयरूप-धर्मस्य समभिव्याहारात्सहोक्तिरलङ्कार. ।

अलङ्कारोऽयं श्लेषगर्भोऽपि भवति । यथा—

अनेन सार्धं तव यौवनेन कोटि परामच्छिदुरोऽध्यरोहत् ।
प्रेमाऽपि तन्वि ! त्वयि वासवस्य गुणोऽपि चापे सुमनःशरस्य ॥

(श्रीहर्षस्य)

इह कोटिपद परमाधिक्यधनुःकोटिपरमत एव श्लेषस्तद्गर्भश्च यौवन-प्रेम्णोरधिरोहणे सहभावश्चमत्कारी ।

२७. विनोक्तिरलङ्कार· —

हृद्ये विनार्थसम्बन्धे विनोक्तिः परिकीर्तिता ।

अत्र हृद्यत्वं विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवति ।

अरमणीयत्वे यथा—

सम्पदा सम्परिष्वक्तो विद्यया चानवद्यया ।
नरो न शोभते लोके हरिभक्तिरस विना ॥

यथा वा—

वदन विना सुकवितां सदन साध्वी विना वनिताम् ।
राज्य च विना धनिता न नितान्त भवति कमनीयम् ॥

रमणीयत्वे यथा—

पङ्कैर्विना सरो भाति सदः खलजनैर्विना ।
कटुवर्णैर्विना काव्यं मानस विषयैर्विना ॥

उभयविध हृद्यत्व यथा—

रागं विना विराजन्ते मुनयो मणयस्तु नो ।
कौटिल्येन विना भाति नरो न कबरीभर· ॥

## अथ विरोधमूलका अलङ्कारः ।

२८. विरोधालङ्कारः ।

विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः । (का. प्र.)

वस्तुतोऽविरोधेऽपि विरुद्धयोरिव धर्मयोर्यदभिधानं स विरोधः । यथाश्रुतशब्दोपस्थितिमहिम्ना विरोधज्ञानेऽपि शब्दस्यान्यत्र तात्पर्यान्न विरोध इत्यय विरोधाभास इत्यप्युच्यते ।

दण्डी तु—

"विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ।
विशेषदर्शनायैव स विरोधः स्मृतो यथा ॥

प्रस्तुतगतोत्कर्षस्य प्रतिपादनायैव विरुद्धानां परस्परैः सहानवस्थानवतां परस्परसामानाधिकरण्यशून्यानां वा पदार्थानां जातिगुणक्रियाद्रव्याणां यत्र वचिस्ये संसर्गदर्शनं सहावस्थानं सामानाधिकरण्यप्रतिपादनं वा स विरोधमूलत्वाद् विरोधालङ्कारः इत्याह ।"

तदेवं जात्या जातिगुणक्रियाद्रव्यैः, गुणस्य गुणक्रियाद्रव्यैः, क्रियायाः क्रियाद्रव्याभ्यां, द्रव्यस्य द्रव्येणेति बहुविधो विरोधः । उदाहरणानि—

कूजितं राजहंसानां वर्धते मदमञ्जुलम् ।
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ॥ (दण्डिनः)

अत्रैकस्मिन् शब्दरूपे कर्तरि विरुद्धयोर्वृद्धिक्षयरूपक्रिययोः सम्बन्धप्रतिपादनेन विरोधः । सम्बन्धिभेदेन शब्दयोर्भिन्नत्वेन तत्प्रशमः ।
गुणस्य क्रियया विरोधः—

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥ (कालिदासस्य)

अत्र भगवतः प्रभावस्यातिशयित्वादापाततः प्रतीयमानस्य विरोधस्य समाधानम् ।

जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥ (कालिदासस्य)

अत्र नञ्तत्पुरुषसमासे विरोधः, बहुव्रीहिणा परिहार ।

प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते ।
रागेण पुनराक्रान्तं जायते जगतां मनः ॥

अत्र श्यामत्वरक्तत्वगुणयोरेकजलधरसम्भवरूपससर्गस्य कीर्तन विरोध । रागस्यानुरागरूपार्थान्तरेण परिहार. ।

२६. असङ्गतिरलङ्कार ।

कार्यकारणयोर्भिन्नदेशतायामसङ्गति । (सा.द )

यद्देशे कारणं तद्देश एव कार्यमुत्पद्यमान दृष्टम् । यथा धूमादि । यत्र तु कारणकार्यरूपयोरपि धर्मयोः कनाप्यतिशयेन नानादेशतया युगपदवभासनम्, सा तयो. स्वभावोत्पन्नसङ्गतित्यागादसङ्गति ।

अहो खलभुजङ्गस्य विचित्रोऽय वधक्रम ।
अन्यस्य दशति श्रोत्रमन्य प्राणैर्विमुच्यते ॥

३० विभावनालङ्कारः ।

विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।
उक्तानुक्तनिमित्तत्वाद्द्विधा सा परिकीर्त्तिता ॥ (सा द )

यत्र प्रसिद्धकारणाभावेऽपि तत्कार्याविर्भावो वर्ण्यते सा विभावना । कारणमात्राभावे तु कार्योत्पत्तिवचनमेवासङ्गतमापद्यते ।

उक्तनिमित्ता यथा—

अनायासकृश मध्यमशङ्कतरले दृशौ ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुव ॥ (सा. द.

यथा वा—

विनैव शस्त्र हृदयानि यूना विवेकभाजामपि दारयन्त्यः ।
अनन्तमायामयवल्गुलीला जयन्ति नीलाब्जदलायताक्ष्य ॥

अनुक्तनिमित्ता तु —

अपमेघोदय वर्षमदृष्टकुसुम फलम् ।
अतर्कितोपपन्न वो दर्शन प्रतिभाति मे ॥ (कालिदासस्य)

यथा वा —

अमाम्बुशिशिरीभवत्प्रसृतमन्दमन्दाकिनी-
मरुत्तरलतारकं स्फुटललाटचन्द्रद्युति ।
अकुङ्कुमकलङ्कितोज्ज्वलकपोलमुत्प्रेक्ष्यते
निराभरणसुन्दरश्रवणपाशसौम्यं मुखम् ॥

३१ विशेषोक्तिरलङ्कारः ।

कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे । (चन्द्रा.)

प्रसिद्धकारणसमूहे सत्यपि कार्यस्याजनिरनुत्पत्तिर्विशेषोक्ति, सा च उक्तनिमित्ता, अनुक्तनिमित्ता, अचिन्त्यनिमित्ता चेति त्रिधा ।

तत्राद्या यथा —

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥

द्वितीया यथा—

प्रतिपलमखिलाँल्लोकान्मृत्युमुखं प्रविशतो निरीक्ष्यापि ।
हा हतकं चित्तमिदं विरमति नाद्यापि विषयेभ्यः ॥ (रस)

यथा वा—

हृदि स्नेहक्षयो नाभूत्स्मरदीपे ज्वलत्यपि । (चन्द्रा.)

तृतीया यथा—

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न बलं हृतम् ॥ (सा. द.)

अत्र तनुहरणेनापि बलाहरणे निमित्तमचिन्त्यम् ।

३२ विषमालङ्कारः ।

गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्ययोः ।
यद्वारब्धस्य वैकल्यमनर्थस्य च सम्भवः ॥
विरूपयोः सङ्घटना या च तद्विषमं मतम् । (सा. द.)

यत्र कारणगुण एकः कार्यगुणस्तद्विपरीतः, क्रिया वा द्वयोर्विरुद्धा, यत्र न केवलमारब्धस्य वैकल्यमनर्थोपपत्तिश्च, यद्विषमयोर्मेलनञ्च भवेत्,

तदेवं चतुर्धा विषमम् । क्रमेण यथा—

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डुयशस्त्रिलोकाभरणं प्रसूते ॥
(नवसाहसाङ्कचरिते)

अत्र कारणरूपासिलतायाः 'कारणगुणा हि कार्यगुणानारभन्ते' इति स्थितेविरुद्धा शुक्लयशस उत्पत्तिः ।

आनन्दममन्दमिम कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीर मे ॥

अत्र त्वमानन्दं ददासि, त्वज्जनितो विरहस्तु तापयतितरामिति हेतु-कार्ययोर्विरुद्धा क्रिया ।

अय रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥ (उद्भटस्य)

अत्र न केवल काङ्क्षितधनलाभो मा भूत, प्रत्युत क्षारवारिभिर्वदन-पूरणरूपानर्थपातः ।

न खलु न खलु बाण सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्नि ।
क्व बत हरिणकाना जीवित चातिलोल
क्व च निशितनिपाता वज्रसारा शरास्ते ॥ (कालिदासस्य)

## ३३. आक्षेपालङ्कारः ।

आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ॥ (चन्द्रा.)

स्वयमुक्तस्यार्थस्य किंचिन्निमित्तमभिसन्धाय प्रतिषेध आक्षेपः । यथा—

साहित्यपाथोनिधिमन्थनोत्थं कर्णामृत रक्षत हे कवीन्द्राः ।
यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति ॥
गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षति क्वापि कवीश्वराणाम् ।
रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥ [युग्मकम्]
(अप्पयदीक्षितस्य)

अत्र पूर्वपद्ये कर्णामृतरक्षणस्य विधिः स्वयमेवोक्तः, परं द्वितीय-पद्ये कर्णामृतस्य समुद्रगतरत्नजातवदक्षयत्वं विचार्य तस्य निषेधः कृतः ।

यथा वा—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमेव।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण॥ (भवभूतेः)

३४. व्याघातालङ्कार।

यद्यथा साधितं केनाप्यपरेण तदन्यथा।
तथैव यद्विधीयेत स व्याघात इति स्मृत.॥ (का. प्र.)

येनोपायेन यदेकेनोपकल्पितम्, तस्यान्येन विजिगीषुतया तदुपायक-मेव यदन्यथाकरणम्, स (साधितवस्तुव्याहतिहेतुत्वात्) व्याघात।

यथा—

दृशा दग्ध मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ता स्तुवे वामलोचनाः॥

३५. विचित्रालङ्कार।

विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत॥ (सा. द.)

इष्टसिद्ध्यर्थमिष्टविपरीताचरण विचित्रमिति भाव.।

यथा—

प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान्।
दु.खीयति सुखहेतो को मूढ. सेवकादन्य॥

३६. अधिकालङ्कार.।

आश्रयाश्रयिणो रेकस्याधिक्येऽधिकमुच्यते। (सा. द)

आश्रय आधार आश्रयीत्वाधेयः। तयोः कस्याप्याधिक्ये महत्त्वातिशये प्रतिपाद्येऽधिकम्। आश्रयाधिक्ये यथा—

किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि॥ (सा. द.)

आश्रिताधिक्ये यथा—

युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकासमासत।

तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भवा मुदः ॥ (माघस्य)

३७ व्याजस्तुतिरलङ्कारः।

उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः। (चन्द्रालोक)

निन्दया स्तुतेः स्तुत्या निन्दाया वा अवगमन व्याजस्तुतिः। निन्दया स्तुतेरवगमने व्याजेन स्तुतिरिति व्याजस्तुतिः, स्तुत्या निन्दाया अवगमने व्याजरूपा स्तुतिः।

निन्दया स्तुत्यभिव्यक्ति र्यथा —

त्यक्त्वा राज्यं गिरमनुसरन् स्त्रीवशान्मूढबुद्धे
राज्ञो भ्रान्त्वा गहनविपिने हारयन् मुग्धकान्ताम्।
सख्यं बद्ध्वा कपिभिरसम लङ्घयन्, कीर्तिमग्र्यां
पूर्वेषां वो विलयमनयो हेमलङ्का किमेतत् ॥

स्तुत्या निन्दाभिव्यक्तिर्यथा—

युक्त तवैतन् रघुवश भूपते!
सतां हि सख्यु. परिपालन व्रतम्।
इत स्तुति का जगदीश! निर्मना
भवान् यदर्थं न्यवधीन् निरागसम् ॥

## अथ हेतुमूलका अलङ्कारा.।

३८ काव्यलिङ्गमलङ्कार —

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्। (सा द)

वाक्यस्य पदार्थस्य वा हेतुरूपेणोक्तौ काव्यलिङ्ग निगद्यते।

तत्र वाक्यार्थता—

यत्वन्नेत्र समानकान्ति सलिले मग्न तदिन्दीवर
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गताः
त्वद्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

अत्र चतुर्थे पादे पादत्रयवाक्यानि हेतव.।

पदार्थता यथा—

त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥ (विश्व.)

अनेकपदं यथा—

पश्यन्त्यसख्यपथगां त्वद्दानजलवाहिनीम् ।
देव त्रिपथगात्मान गोपयत्युग्रमूर्धनि ॥ (विश्व.)

३६. अनुमानालङ्कार. ।

अनुमानं तु विच्छित्या ज्ञानं साध्यस्य साधनात् । (सा. द.)

पण्डितराजस्तु अनुमितिकरणमनुमानमिति लक्षणमाह । विच्छित्या अलङ्कारादिकृतवैचित्र्येण । व्याप्तिप्रकारकपक्षधर्मतानिश्चयजन्मज्ञानमनुमितिः । व्याप्ति (साध्यहेत्वोः सहचारं) विशेषणीकृत्य पक्षस्य (पर्वतादे.) धर्मोऽयमिति (धूम पर्वतेऽस्ति तत्तद् व्याप्यो वह्निरपि साधयितु शक्यः) निश्चयाज्जनितं 'वह्निमान्' इत्यादि ज्ञानमनुमितिः ।

यथा—

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजै. ।
विकसन्त्या च मालत्या गतोऽस्त ज्ञायते रविः ॥ (कुव.)

यथा वा—

तस्मिन्मणिव्रातहतान्धकारे पुरे निशालोपविधानदक्षे ।
सद्यो विमुक्ता दिवसावसान कोका सशोकाः कथयन्ति नित्यम् ॥
(रस.)

४०. समुच्चयालङ्कारः ।

समुच्चयोऽयमेकस्मिन्सति कार्यस्य साधके ।
खले कपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत् ।
गुणौ क्रिये वा युगपत्स्यातां यद्वा गुणक्रिये ॥ (सा. द.)

प्रस्तुतस्य कार्यस्यैकस्मिन् साधके स्थिते यत्र साधकान्तराणि सम्भवन्ति स समुच्चयः । खले कपोतिकान्यायश्च—'वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।' यथा भक्षणार्थं कपोतानां खले युगपत्पतनं तथैव कार्यानुष्ठानार्थं युगपदनेकस्योपस्थापनम् । एष एक प्रकार· । गुणयो क्रिययोर्गुणक्रिययोर्वा यौगपद्येनावस्थाने त्रिविध इति चतुर्विध. समुच्चयः । स च सद्योगेऽसद्योगे सदसद्योगे च त्रिधा पर्यवस्यति ।

क्रमेणोदाहरणानि—

हंहो धीरसमीर हन्त जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तर परिचयो गोदावरीवारिभिः।
प्रत्यङ्गं दहसीति मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः॥
(विश्वनाथस्य)

विरहिण उक्तिरियम्। अत्र दाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम्।

गुणयौगपद्यं यथा—

प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः।
रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः॥ (रस)

क्रियायौगपद्यं यथा—

उदितं मण्डलमिन्दोरुदितं सद्यो वियोगिवर्गेण।
मुदितं च सकलयुवजनचूडामणिशासनेन मदनेन॥ (रस)

गुणक्रिययोर्यौगपद्यं यथा—

कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः॥ (का प्र)

४१. कारणमालालङ्कारः।

परं परं प्रति यदा पूर्वपूर्वस्य हेतुता।
तदा कारणमाला स्यात्॥ (सा. द.)

प्रथमं कार्यत्वापन्नस्य पश्चादन्यं प्रति हेतुत्वमित्येवं रीत्या यत्र कार्य-कारणभावा वर्ण्यन्ते सा कारणमाला। यथा—

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते।
निर्विण्णः शुचमेति शोकविहतो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम्॥ (शूद्रकस्य)

४२. एकावल्यलङ्कारः।

पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम्।
स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदैकावली द्विधा॥ (सा. द.)

अपोह्यते निषिध्यते।

क्रमेणोदाहरणम्—

सरो विकसिताम्भोजमम्भोज भृङ्गसङ्गतम् ।
भृङ्गा यत्र सुसङ्गीताः सङ्गीत मधुवर्षि च ॥

न तज्जलं यन्न सुचारुपङ्कज न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जित तन्न जहार यन्मनः ॥
(भट्टिकवेः)

४३ अर्थापत्तिरलङ्कार ।

दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते । (सा. द.)

मूषिकेण दण्डो भक्षित इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति न्यायो दण्डापूपिका । तयाऽर्थान्तरबोधनमर्थापत्तिः । अत्र च क्वचित् प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतन क्वचिदप्राकरणिकार्थात् प्राकरणिकार्थस्येति द्वौ भेदौ । क्रमेणोदाहरणम्

हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्करा. ॥

विललाप स बाष्पगद्गद सहजामप्यपहाय धीरताम् ।
अतितप्तमयोऽपि मार्दव भजते कैव कथा शरीरिणाम् ॥ (कालि )

द्वितीयपद्ये—अति कठिन लौहमपि तापेन गलित भवतीति तदपेक्षया अतिसुकुमारस्य मनुष्यहृदयस्य गलनं सुतरामायातीत्यर्थापत्ति. ।

## अथ विविधालङ्कारा: ।

४४. यथासङ्ख्यमलङ्कार. ।

यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ॥ (सा. द.)

यथा—

द्रुमपङ्कजविद्वांसः सर्वसन्तोषपोषकाः ।
मुधैव हन्त हन्यन्ते कुठारहिमदुर्जनैः ॥ (रस )

४५. परिकरालङ्कारः ।

उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः । (सा. द.)

साभिप्रायैर्विशेषणैः विशेष्यस्याभिधानं परिकरो नामालङ्कारः । यथा—

तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ (कालि )

अत्र कुसुमायुध इति विशेषणं वक्तुर्निःसारायुधत्वं द्योतयति, पिनाकपाणेरिति च रुद्रस्य महासारायुधत्वम् । इत्युभयं साभिप्राय विशेषणम् ।

४६. परिवृत्तिरलङ्कार. ।

परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् । (सा. द.)

समस्य न्यूनस्य अधिकस्य वा पदार्थस्य समेन अधिकेन न्यूनेन वा पदार्थान्तरेण परिवर्त्तनं परिवृत्तिः । क्रमेणोदाहरणम्—

तदा भगवता तेन दृष्टि दत्वा रणाङ्गणे ।
गृहीतं जोवित तेषामचिरात् परिपन्थिनाम् ॥ (स कं )

अत्र समयोर्दृष्टिजीवितयोरेकस्य दानेनापरस्य ग्रहणात् समस्य समेन विनिमय. ।

एवमेव—

दत्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्वा गृहीतो मदनज्वर· ॥ (सा द.)

अत्र पूर्वार्धे समेन समस्य उत्तरार्धे अधिकेन न्यूनस्य विनिमय· ।

शस्त्रप्रहार ददता भुजेन तव भूभुजाम् ।
चिरार्जित हृतं तेषां यश. कुमुदपाण्डुरम् ॥ (काव्यादर्शे)

अत्र न्यूनेनाधिकस्य विनिमयः ।

एवमेव—

तस्य च प्रवयसो जटायुष. स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्वल यश. ॥ (अलङ्कारसर्वस्वे)

अत्र शरीरं दत्वा यशो गृहीतमिति न्यूनेन अधिकस्य विनिमयः । अपि च दानादानव्यवहारः कविकल्पित एव, न तु वास्तव. । यत्र वास्तवस्तत्र नालङ्कार. । यथा 'क्रीणन्ति प्रविकचलोचना. समन्तान्मुक्ताभिर्बदरफलानि यत्र बालाः ।'

४७. परिसंख्यालंकारः ।

> प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ।
> तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥

परिसंख्या— (सा द.)

प्रश्नपूर्वकं प्रश्न विनैव वा यदि कथिताद् वस्तुन. कथितवस्तु-सदृशस्य अन्यस्य वस्तुन. निषेधस्तदा परिसंख्या नाम अलङ्कारो भवति। प्रश्नपूर्विका अप्रश्नपूर्विका चेय परिसंख्या व्यपोह्यमानस्य शाब्दत्वार्थत्व-भेदेन व्यवच्छेद्यस्य वाच्यत्वेन प्रतीयमानत्वेन वा चतुर्विधा भवति। यत्र कविप्रतिभोत्थापितेतरव्यावृत्तिस्तत्रैवालङ्कारविषयः।

क्रमेणोदाहरणम्—

> किं भूषणं सुदृढमत्र ? यशो न रत्नं
> किं कार्यमार्यचरित ? सुकृत न दुष्टम् ।
> कि चक्षुरप्रतिहत ? धिषणा न नेत्र
> जानाति कस्त्वदपर. सदसद्विवेकम् ॥

अत्र किमिति प्रश्नपूर्वकं यशआदे रत्नादे व्यवच्छेदः शाब्दः, नञा साक्षात्तस्याभिधानात् ।

> किमाराध्यं सदा पुण्यं कश्च सेव्य· सदागम· ।
> को ध्येयो भगवान् विष्णु कि काम्यं परमं पदम् ॥

अत्र प्रतिषेधकस्य नञः व्यवच्छेद्यस्य पापादे· शब्देनानुपात्तत्वात् किम्पदेन प्रश्नपूर्वकमार्थो व्यपोहः ।

> भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
> चिन्ता यशसि न वपुषि प्राय: परिदृश्यते महताम् ॥

अत्र किमादेरभावात् प्रश्नाभावः। विभवादेर्व्यपोहश्च शाब्दः नञा तदभिधानात् ।

यथा वा—

> दानेन पाणिर्न तु कङ्कणेन श्रोत्रं श्रुतेनैव न कुण्डलेन ।
> विभाति काय: करुणापराणां परोपकारेण न चन्दनेन ॥ (अ कौ.)

अत्रापि पाण्यादिशोभासाधनत्वाभावाश्रयाः कङ्कणादयो वाच्याः ।

सोऽर्थो यो निजहस्ते तन्मित्रं यन्निरन्तरं व्यसने।
तद्रूपं यत्र गुणास्तद्विज्ञानञ्च यत्र धर्मः ॥ (सातवाहनस्य)

अत्रार्थो व्यपोहः।

श्लेषमूलत्वे चास्य वैचित्र्यविशेषो यथा —

यस्य च परलोकाद् भयम्, अन्तःपुरिकाकुन्तलेषु भङ्गः, नूपुरेषु मुखरता, विवाहेषु करग्रहणम्, अनवरतमखाग्निधूमेनाश्रुपातः, तुरङ्गेषु कशाभिघातः, मकरध्वजे चापध्वनिरभूत्। (बाणस्य)

४८ प्रत्यनीकालङ्कारः।

प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते॥ (का. प्र)

अथ वा—

आत्मापकारजनकप्रत्यपकारासमर्थेन।
तत्सम्बन्ध्यपकारे प्राज्ञतमैः प्रत्यनीकमुक्तम्॥ (अ. कौ)

तिरस्कृतितत्परमपि शत्रुं साक्षान्निरसितुमशक्तेन केनापि यत्तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणं तत् (अनीकप्रतिनिधितुल्यत्वात्) प्रत्यनीकमभिधीयते।

"अनीकेन सदृशं प्रत्यनीकम्। लोके प्रतिपक्षस्य तिरस्कारायानीकं प्रयुज्यते। तदशक्तौ प्रतिपक्षसम्बन्धिन कस्यचित्तिरस्कारः क्रियते। स चानीक-सदृशतया प्रयुज्यमानत्वात् प्रत्यनीकमुच्यते।"

उदाहरणम्—

यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृति कृती राहुरिन्दुमधुनाऽपि बाधते॥ (माघस्य)

४९. पर्यायोक्तमलङ्कारः।

पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते। (सा. द.)

यदा भङ्ग्या उक्तिवैचित्र्यविशेषेण प्रकारान्तरेण वा व्यङ्ग्यमेव स्फुटं प्रतिपाद्यते तदा पर्यायोक्तं नामालङ्कारः।

दण्डी तु—

अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये।
यत्प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते॥

इति तल्लक्षणमाह।

उदाहरणम्—

स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः ।
सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥ (हयग्रीववधे)

अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणं वैचित्र्य-विशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्यद्वारेणाभिहितम् ।

५०. स्वभावोक्तिरलङ्कारः ।

स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् । (का. प्र.)

डिम्भः शिशुः । स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानं च ।

दण्डी तु—

नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती ।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्यथा ॥

इति लक्षणमाह ।

उदाहरणम्—

तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः ।
त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः ॥ (काव्यादर्शे)

यथा वाभिज्ञानशाकुन्तले—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

यथा वा स्वप्नवासवदत्ते—

खगा वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।
परिभ्रष्टो दूराद् रविरपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ॥ (भासस्य)

५१. भाविकालङ्कारः ।

अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥ (सा. द.)

भूतस्य भविष्यतो वा अद्भुतस्य वस्तुनः प्रत्यक्षवत्त्वेन वर्णनं भाविकं नामालङ्कारः । अथ वा

भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम्। (चन्द्रालोके)

उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाऽऽकृतिम्॥

५२. उदात्तालङ्कारः।

लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते।
यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्॥ (सा. द.)

यदलौकिक्याः सम्पत्तेर्वर्णनम्, यदि वा प्रस्तुतस्याङ्गं महात्मनां चरितं स्यात्तदुभयविधमुदात्तम्।

क्रमेण उदाहरणम्—

रत्नभित्तिषु सङ्क्रान्तैः प्रतिबिम्बशतैर्वृतः।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः॥

अत्र प्रतिबिम्बग्राहिरत्नखचितभित्तिवर्णनेन राक्षसराजस्यालौकिकविभूतिमत्त्वं प्रतीयते।

नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते॥ (माघस्य)

अत्र प्रस्तुतस्य समुद्रस्याङ्गत्वेन लोकसंहर्तुर्भगवतः शयनं वर्णितमिति उदात्तालङ्कारः।

५३. मुद्रालङ्कारः।

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः। (चन्द्रा.)

प्रकृतार्थपरैः पदैः सूचनीयस्यार्थस्य सूचनं मुद्रा नामालङ्कारः।

यथा—

उदयनवेन्दुसवर्णावासवदत्तावलौ बलस्य त्वाम्।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम्॥ (भासकवेः)

अत्र प्रकृतस्य बलरामभुजयुगस्य वर्णनपरैर्विशेषणैः नाटकीयमुख्यपात्राणां "उदयनवासवदत्तापद्मावतीवसन्तकानां" सूचनान्मुद्रालङ्कारः।

## अथ रसालङ्काराः ।

रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।
गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ।
रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ॥ (सा. द.)

५४. रसवदलङ्कारः ।

यत्र रसोऽन्यस्मिन्नर्थेऽङ्गत्वं भजति तत्रान्योपकारकत्वाद्रसवदलङ्कारो भवति । यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥ (कुव.)

अत्र मुनिविषयकरतिरूपस्य भावस्याद्भुतरसोऽङ्गम् ।

५५. प्रेयोऽलङ्कारः ।

यत्र भावोऽन्यस्मिन्नर्थेऽङ्गत्वं भजति तत्रान्योपकारकत्वात् प्रेयोऽलङ्कारो भवति । प्रेयोऽलङ्कार एव भावालङ्कार उच्यते । स यथा—

कदा वाराणस्याममरतटिनीरोधसि वस-
न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ (कुव.)

अत्र शान्तिरसस्य कदेतिपदसूचितश्चिन्ताख्यो व्यभिचारी भावोऽङ्गम् ।

५६. ऊर्जस्व्यलङ्कारः ।

रसाभासभावाभासयोरितराङ्गत्वेऽयमलङ्कारः ।

यथा—

माणिक्यमण्डनरुचिप्रसरप्ररोहै-
रुद्भावयन्त इव रागविशेषमन्तः ।
सामन्तभूमिपतयश्चरणारविन्दे
नीराजयन्ति तव राजकुलाधिराज ॥ (अ. कौ.)

अत्र वैरिनिष्ठराजविषयकभावाभासः कविनिष्ठराजविषयकभावस्याङ्गम् ।

५७. समाहितालङ्कार. ।

भावप्रशमस्येतराङ्गत्वे समाहितालङ्कारः। यथा—

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥ (सा. द )

अत्र मदाख्यभावस्य प्रशमो राजविषयकरतिभावस्याङ्गम्।

अथ मिश्रालङ्कारा. ।

यद्येत एवालङ्कारा· परस्परविमिश्रिता. ।
तदा पृथगलङ्कारौ संसष्टि सङ्करस्तथा ॥ (सा.द )

यथा लौकिकालङ्काराणामपि परस्परं मिश्रणे पृथक्चारुत्वेन पृथगलङ्कारत्वं तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे ससृष्टिसङ्कराख्यौ पृथगलङ्कारौ। तत्र

५८ संसृष्टिरलङ्कार· ।

मिथोऽनपेक्षयैतेषां स्थिति· संसृष्टिरुच्यते। (सा द )

एतेषां शब्दार्थालङ्काराणामन्यान्यनिरपेक्षतया तिलतण्डुलन्यायेन स्फुटावगम्यभेदालङ्कारमेलने संसृष्टिः।

यथा—

वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया ॥ (माघस्य)

अत्र शब्दालङ्कारयोरनुप्रासयमकयो ससृष्टि ।

यथा वा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जन नभ· ।
असत्पुरुषसेवेव दृष्टिर्विफलताङ्गता ॥ (शूद्रकस्य)

अत्र शब्दार्थालङ्कारयोरनुप्रासोपमयोः संसृष्टिः।

५९ सङ्करालङ्कार ।

अङ्गाङ्गित्वेऽलंकृतीनां तद्वदेकाश्रयस्थितौ।
सन्दिग्धत्वे च भवति सङ्करस्त्रिविध पुनः॥ (सा. द.)

अङ्गाङ्गिभावो यथा—

तलेष्ववेपन्त महीरुहाणां छायास्तदा मारुतकम्पितानाम्।
शशाङ्कसिंहेन तमोगजानां लूनाकृतीनामिव गात्रखण्डाः॥ (कुव.)

अत्रातिशयोक्तिरूपकोत्प्रेक्षाणामङ्गाङ्गिभावेन सङ्करः ।

यथा वा—

> अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
> अहो दैवगतिश्चित्रा तथापि न समागमः ॥

अत्र समासोक्तिविशेषोक्त्योरङ्गम् ।

एकाश्रयानुप्रवेशो यथा—

> स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-
> विस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
> श्लिष्टाष्टदिग्दलकपालमुखावतार-
> बद्धान्धकारमधुपावलि सञ्चुकोच ॥ (का. प्र)

अत्र रूपकानुप्रासावेकपदानुप्रविष्टौ ।

सन्देहसङ्करो यथा—

> इदमाभाति गगने भिन्दानं सन्ततन्तमः ।
> अमन्दनयनानन्दकरं मण्डलमैन्दवम् ॥ (सा. द)

अत्र साधकबाधकयोर्विरहे बहूनामलङ्काराणां[1] सन्देहात् सन्देहसङ्करः ।

॥ समाप्तेयमलङ्कारकौमुदी ॥

---

1. "अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः, उतेदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम्, अथवेदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसम्बन्धात्तुल्ययोगिता, आहो स्विच्चन्द्रस्याप्रकृतत्वाद्दीपकम्, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात्समासोक्ति, यद्वा अप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनकालः स्वकार्यभूतचन्द्रवर्णनमुखेन वर्णित इति पर्य्यायोक्तिरिति ।" (सान्धिविग्रहिकाः)

# लक्षणकारिकाणामनुक्रमणी ।

॥ श्रीः ॥

# उदाहरणप्रतीकानुक्रमणी ।

| प्रतीकानि | पृष्ठे |
|---|---|

---